प्रमदङ्कूर्च्चं च निःक्षिप्य चषकं सफलाक्षतम् ।
पिधाय कुम्भवक्त्रञ्च सौमेनाच्छादयेत् पुनः ॥
प्रणम्य नत्वा ततः साध्यं तथानीय सुवृद्धतम् ।
मदनस पञ्चशाखेषु सुदृश्ये शोभने सुधीः ॥
अभिषिञ्चेम्मातृकाणैर्य्यजमानञ्च साधकः ।
सुमङ्गलाभिर्नारीभिः सिन्दूरपुष्पाक्षताञ्चितम् ॥
आर्थिनानां द्विजातीनामाशीर्व्वादपरःसरम् ।
करेणास्य शिरः स्पृष्ट्वा प्रयुञ्जीताशिषं पुनः ॥
भद्रमस्तु शिवञ्चास्तु महामाया प्रसीदतु ।
रक्षन्तु त्वां सदा देवाः सम्पदः सन्तु सर्व्वदा ॥
अथोत्थायाभिषिक्तः सन् तोषयेद्ब्राह्मणान्
धनैः ।
एवमेव यजमानस्य शान्तिर्भवति निश्चिता ॥
प्रसङ्गाद्बलिविघ्नस्य शान्तिकर्म्म निरूपितम् ।
सर्व्वसम्पत्करं पुंसां सर्व्वसौभाग्यसिद्धिदम् ।
भूते च दुर्निमित्तादावप्येवं शान्तिमाचरेत् ॥”
इति निबन्धतन्त्रोक्तबलिविघ्नशान्तिसंग्रहः ॥ * ॥
अन्यच्च ।
“एकखड्गप्रहारेण पशुर्यत्र न हन्यते ।
तदा विघ्नं विजानीयाद्दातुर्व्वा च्छेत्तुरेव
वा ॥”
प्रायश्चित्तमाह ।
“हन्यादेकप्रहारेण अन्यथा दोषमावहेत् ।
तच्छान्तये जपेद्विद्वान् दुर्गाबीजसहस्रकम् ।
सहस्रं जुहुयाद्वह्नौ प्रदद्यात् स्वर्णमाषकम् ॥”
इति तन्त्रमहार्णवे वाचस्पतिमिश्रैरुक्तम् ॥ * ॥
अपरञ्च कालिकापुराणे ।
“चन्द्रहासेन कर्त्तार्य्या छेदनं मुख्यमिष्यते ।
हस्तेन च्छेदयेद्यस्तु शोणितं साधकः पशुम् ।
पक्षिणं वाथ राजेन्द्र ! ब्रह्महत्यामवाप्नुयात् ॥”
मत्स्यसूक्ते ।
“छिन्द्यात्तीक्ष्णखड्गेन प्रहारेण सकृद्बुधः ॥”
इति दुर्गोत्सवतत्त्वम् ॥
पश्वादिबलिदानविधिर्य्यथा,—
“बलिदानविधानञ्च श्रूयतां मुनिसत्तम ! ।
मायातिं महिषं छागं दद्यान्मेषादिकन्तथा ॥
सहस्रवर्षं सा प्रीता दुर्गा मायातिदानतः ।
महिषेण वर्षशतं दशवर्षञ्च छागलात् ॥
वर्षमेकेन कुष्माण्डैः पक्षिभिर्हरिणैस्तथा ।
दशवर्षं कृष्णसारैः सहस्राब्दञ्च गण्डकैः ॥
कृत्रिमैः पिष्टनिर्म्माणैः षण्मासं पशुभिस्तथा ।
मासं सुधाखादिफलैरक्षतैरिति नारद ! ॥
युवकं व्याधिहीनञ्च सरङ्गं लक्षणान्वितम् ।
विशुद्धमविकाराङ्गं सपर्णं पुष्टमेव च ॥
शिशुना वर्णिना दातुर्हन्ति पुत्रञ्च चण्डिका ।
वृद्धेनैव गुरुजनं कृशेन बान्धवन्तथा ॥
कुलक्षेत्राधिकाङ्गेन हीनाङ्गेन प्रजान्तथा ।
कामिनीं भग्नशृङ्गेन काणेन भ्रातरन्तथा ॥
चाण्डालेन भवेन्मृत्युर्धनिनञ्च विनश्यति ।
रक्तं भिन्नं ताम्रपृष्ठे भद्रेण पुच्छहीनके ॥
मायातोषाय निर्णीतं श्रूयतां मुनिसत्तम ! ।
महाभ्यर्च्चवेदोक्तं फलहानिर्न्नतिक्रमे ॥” * ॥

अथ नरबलिः ।
“पितृमातृविहीनञ्च युवकं व्याधिवर्ज्जितम् ।
विवाहितं दीक्षितञ्च परदारविहीनकम् ॥
अजारिकं विशुद्धञ्च सच्छूद्रं मूलकं वरम् ।
तद्बन्धुभ्यो धनं दत्त्वा क्रीतं मूल्यातिरेकतः ॥
स्नापयित्वा च तं धर्म्मी संपूज्य वस्त्रचन्दनैः ।
माल्यैर्धूपैश्च सिन्दूरैर्दधिगोरोचनादिभिः ॥
तञ्च वर्षं भ्रामयित्वा परङ्गारेण यत्नतः ।
वर्षान्ते च समुत्सृज्य दुर्गायै तं निवेदयेत् ॥
अष्टमीनवमीसन्धौ दद्यान्मायातिमेव च ।
इत्येवं कथितं सर्व्वं बलिदानप्रसङ्गतः ॥” * ॥
अपि च ।
“सप्तम्यां पूजनं कृत्वा बलिं दद्याद्विचक्षणः ।
अष्टम्यां पूजनं शस्तं बलिदानविवर्ज्जितम् ॥
अष्टम्यां बलिदानेन विपत्तिर्जायते ध्रुवम् ।
दद्याद्विचक्षणो भक्त्या नवम्यां विधिवद्बलिम् ॥
बलिदानेन विप्रेन्द्र ! दुर्गाप्रीतिर्भवेन्नृणाम् ।
हिंसाजन्यञ्च पापञ्च लभते नात्र संशयः ॥
उत्सर्गकर्त्ता दाता च च्छेत्ता पोष्टा च रक्षकः ।
अग्रपश्चान्निरोद्धा च सप्तैते वधभागिनः ॥
योऽयं हन्ति स तं हन्ति चेति वेदोक्तमेव च ।
कुर्व्वन्ति वैष्णवीं पूजां वैष्णवास्तेन हेतुना ॥”
इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे । ६१-६२ । अध्यायौ ॥
श्रीभगवानुवाच ।
“क्रमन्तु बलिदानस्य स्वरूपं रुधिरादिभिः ।
यथा स्यात् प्रीतये सम्यक् तथा वक्ष्यामि
पुत्रकौ ॥
वैष्णवीतन्त्रकल्पोक्तः क्रमः सर्व्वत्र सर्व्वदा ।
साधकैर्ब्बलिदानेषु ग्राह्यः सर्व्वसुरस्य तु ॥
पक्षिणः कच्छपा ग्राहा मत्स्या नवविधा मृगाः ।
महिषो गोधिका गावश्छागो बभ्रुश्च शूकरः ॥
खड्गश्च कृष्णसारश्च गोधिका सरभो हरिः ।
शार्दूलश्च नरश्चैव स्वगात्ररुधिरन्तथा ।
चण्डिकाभैरवादीनां बलयः परिकीर्त्तिताः ॥
बलिभिः साध्यते मुक्तिं र्बलिभिः साध्यते दिवम् ।
बलिदानेन सततं जयेत् शत्रून् नृपान् नृपः ॥ ८ ॥
मत्स्यानां कच्छपानाञ्च रुधिरैः सततं शिवा ।
मासैकन्तृप्तिमायाति ग्राहैर्मासांस्तु त्रीनथ ॥
मृगाणां शोणितैर्देवी नराणामपि शोणितैः ।
अष्टौ मासानवाप्नोति तृप्तिं कल्याणदा च सा ॥
गोगोधिकानां रुधिरैर्वार्षिकीं तृप्तिमाप्नुयात् ॥
कृष्णसारस्य रुधिरैः शूकरस्य च शोणितैः ।
आप्नोति सततं देवी तृप्तिं द्वादशवार्षिकीम् ॥
अजाविकानां रुधिरैः पञ्चविंशतिवार्षिकीम् ।
महिषाणाञ्च खड्गानां रुधिरैः शतवार्षिकीम् ।
तृप्तिमाप्नोति परमां शार्दूलरुधिरैस्तथा ॥
सिंहस्य शरभस्याथ स्वगात्रस्य च शोणितैः ।
देवी तृप्तिमवाप्नोति सहस्रं परिवत्सरान् ॥
मांसैरपि तथा प्रीतो रुधिरैर्यस्य यावती ॥
कृष्णसारस्तते खड्गं तथा मत्स्यञ्च रोहितम् ।
वार्द्धीनसञ्चागञ्चापि फलं तेषां पृथक् शृणु ॥ ५ ॥
कृष्णसारस्य मांसेन तथा खड्गेन चण्डिका ।

वर्षान् पञ्चशतान्येव तृप्तिमाप्नोति केवलाम् ॥
रोहितस्य तु मत्स्यस्य मांसैर्वार्द्धीनसस्य च ।
तृप्तिमाप्नोति वर्षाणां शतानि त्रीणि मत्प्रिया ॥
त्रिःपिबं त्विन्द्रियक्षीणः श्वेतो वृद्धस्त्वजापतिः ।
वार्द्धीनसः प्रोच्यतेऽसौ हव्ये कव्ये च सत्तमः ॥
नीलग्रीवो रक्तशीर्षः कृष्णपादः सितच्छदः ।
वार्द्धीनसः स्यात् पक्षीशो मम विष्णोरतिप्रियः ॥
नरेण बलिना देवी सहस्रं परिवत्सरान् ।
विधिदत्तेन चाप्नोति तृप्तिं लक्षं त्रिभिर्नरैः ॥
नारेणैवाथ मांसेन त्रिसहस्राणि वत्सरान् ।
तृप्तिं प्राप्नोति कामाख्या भैरवी मम रूपधृक् ॥
मन्त्रपूतं शोणितन्तु पीयूषं जायते सदा ।
गलकस्यापि तस्यापि मांसन्यापि यदा शिवा ॥
तस्मात्तु पूजने दद्याद्बलेः शीर्षञ्च लोहितम् ।
भोज्ये होमे च मांसानि नियुञ्जीयाद्विचक्षणः ॥
पूजास्तु नाम मांसानि दद्यान्न साधकः क्वचित् ।
कृते तु लोहितं शीर्षममृतं तत्तु जायते ॥ ८ ॥
कुष्माण्डमिक्षुदण्डञ्च मद्यमासवमेव च ।
एते बलिसमाः प्रोक्तास्तृप्तौ छागसमाः सदा ॥
चन्द्रहासेन कर्त्त्र्या वा छेदनं मुख्यमिष्यते ।
दात्रासिधेनुकाचवकुलाभिस्तु मध्यमम् ।
क्षुरक्षुरप्रभल्लैश्चैवाधमं परिकीर्त्तितम् ॥
एभ्योऽन्यैः शक्तिबाणाद्यैर्बलिच्छेदः कदापि न ।
नाप्ति देवी बलिं तन्तु दाता मृत्युमवाप्नुयात् ॥
हस्तेन छेदयेद्यस्तु शोणितं साधकः पशुम् ।
पक्षिणं वा त्रजहत्यां सोऽवाप्नोति सुदुःसहाम् ।
नामन्त्र खड्गन्तु बलिं नियुञ्जीत विचक्षणः ॥
खड्गस्यामन्त्रणे मन्त्रा यावन्तः कथिताः पुरा ।
महामायाबलौ ते वै योज्यास्तत्रोदिता बुधैः ॥
तैः सार्द्धमेते मन्त्रास्तु योज्याः खड्गाभिमन्त्रणे ।
पूजने शारदादीनां कामाख्याया विशेषतः ॥
ह्रीः कालीति ततो देया वज्रेश्वरिपदन्तथा ।
ततोऽनु लौहदण्डायै नमः शेषे तु योजयेत् ॥
संपूज्यानेन मन्त्रेण खड्गमादाय पाणिना ।
कालरात्र्यास्तु मन्त्रेण तं खड्गमभिमन्त्रयेत् ॥
नेत्रबीजस्य मध्यन्तु द्विरावृत्य प्रयोजयेत् ।
ततोऽनु कालीति विकटदंष्ट्रेऽनु तत्पदम् ॥
क्रान्तादीनां तृतीयेन स्वरेणैकादशेन च ।
योजितौ नादबिन्दुभ्यां द्वौ तत्पश्चान्नियोजयेत् ॥
फेत्कारिणिपदं तस्मात् खादय छेदयेति च ।
सर्व्वदुष्टानिति ततो द्विर्मारय सुतापकम् ॥
खड्गेन छिन्धि छिन्धीति ततः किल किलेति
वै ।
ततश्चिकि चिकीत्येव ततः पिब पिबेति च ॥
ततोऽनु रुधिरञ्चैव स्फ्रौं स्फ्रौं किरि किरीति च ।
कालिकायै नम इति कालरात्र्यास्तु मन्त्रकम् ॥
इत्यनेन तु मन्त्रेण करवालेऽभिमन्त्रिते ।
कालरात्रिः स्वयं तस्मिन् प्रविशत्यविधानवे ॥ ८ ॥
बलेः पूर्व्वोदिता मन्त्रा नित्यं ग्राह्यास्तु साधकैः ।
अयं मन्त्रास्तु वक्तव्यस्तस्य हत्याविधानवे ॥
यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।
अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः ॥

बलिः
बलिः

ततो देवतमुद्दिश्य काममुद्दिश्य चात्मनः ।
छेदयेत्तेन खड्गेन बलिं पूर्व्वाननं तु तम् ॥
अथवोत्तरवक्त्रन्तं स्वयं पूर्व्वमुखस्तथा ।
पूर्व्वोक्तान् सैन्धवादींस्तु रक्ते वस्तं नियोजयेत् ॥
सौवर्णं राजतं ताम्रं रैत्यं पत्रपुटञ्च वा ।
माहेयं कांस्यमथवा यज्ञकाष्ठमयञ्च वा ।
पात्रं रुधिरदानाय कर्त्तव्यं विभवावधि ॥
न लौहे वाल्कले वापि रैत्ये वाङ्गेऽथ सैसके ।
दद्याद्रक्तं बलीनान्तु भूमौ स्रुचि स्रुवेऽथवा ॥
न घटे भूतले नापि न क्षुद्रे पानभाजने ।
रुधिराणि प्रदद्यात्तु भूतिकामो नरोत्तमः ॥
नरस्य तु सदा रक्तं माहेये तैजसेऽथवा ।
दद्यान्नरपतिस्तत्तु न पुटादौ कदाचन ॥*॥
हयमेधमृते दद्यान्न कदाचिद्धयं बलिम् ।
तथा दिक्पालमेधेषु गजं दद्यान्नराधिपः ॥
न कदाचित्तथा देव्यै प्रदद्याद्धयहस्तिनौ ।
हयाकर्षे चामरन्तु बलिं दद्यान्नराधिपः ॥
सिंहं व्याघ्रं नरञ्चापि स्वगात्ररुधिरन्तथा ।
न दद्याद्ब्राह्मणो मद्यं तथा देव्यै कदाचन ॥
सिंहव्याघ्रनरान्दत्त्वा ब्राह्मणो नरकं व्रजेत् ।
इहापि स्यात स हीनायुः सुखसौभाग्यवर्जितः ॥
स्वगात्ररुधिरं दत्त्वा चात्महत्यामवाप्नुयात् ।
मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ।
न कृष्णसारं वितरेद्बलिन्तु क्षत्त्रियः क्वचित् ।
ददतः कृष्णसारन्तु ब्रह्महत्या भवेद्यतः ॥
यत्र सिंहस्य व्याघ्रस्य नरस्य विहितो वधः ।
ब्राह्मणोक्ते तु बल्यादौ तत्रायं विहितः क्रमः ॥
कृत्वा घृतमयं व्याघ्रं नरं सिंहञ्च भैरव ! ।
अथवा पूपविकृतं यवचोदमयञ्च वा ।
घातयेच्चन्द्रहासेन तेन मन्त्रेण संस्कृतम् ॥*॥
प्रभूतबलिदाने तु द्वौ वा त्रीन् वाग्रतः कृतान् ।
पूजयेत् प्रमुखान् कृत्वा सर्व्वान् तन्त्रेण साधकः ।
सामान्यपूजा कथिता बलीनां पूर्व्वतो मया ।
विशेषो यत्र यत्रास्ति तन्मत्तः शृणु भैरव ! ॥*॥
महिषं प्रददौ देव्यै भैरव्यै भैरवाय वा ।
अनेनैव तु मन्त्रेण तथा तं पूजयेद्बलिम् ॥
यथा वाहं भवान् देवि यथा वहसि चण्डिकाम् ।
तथा मम रिपून् हिंस शुभं वह तुलापक ! ॥
यमस्य वाहनस्त्वन्तु वररूपधराव्यय ! ।
आयुर्व्वित्तं यशो देहि कासराय नमोऽस्तु ते ॥
खड्गस्य तु यदादानं क्रियते तत्र मन्त्रयम् ।
जलेनाभ्युक्ष्य कुर्व्वीत गृह्णातेति भावयन् ॥
देवे पित्रे च सुभगः खड्गस्त्वं खड्गसन्निभः ।
छिन्धि पिशान् महाभाग ! गुहाजात नमोऽस्तु ते ।
प्रदाने कृष्णसारस्य मन्त्रोऽयं परिकीर्त्तितः ।
कृष्णसार ! मखश्रेष्ठ ब्रह्मतेजोविवर्द्धन ।
चतुर्व्वेदमयः प्राज्ञः प्रज्ञां देहि यशो मम ॥*॥
तथा शरभपूजायां मन्त्रमेतत् प्रकीर्त्तितम् ।
अष्टपादो विश्वंभर चन्द्रभागवसुन्दर ! ।
अष्टमूर्त्ते महाभाग भैरवाख्य नमोऽस्तु ते ॥
यथा भैरवरूपेण पराद्धो निहतस्त्वया ।
तथा शरभरूपेण रिपु दिक्षान्निसूदय ॥
हरिस्त्वं हररूपेण यथा वहसि चण्डिकाम् ।
तथाशुभानि मे नित्यं वहुविघ्नांश्च सूदय ॥
त्वं हरिः सिंहरूपेण जगत्प्रत्यूहरूपिणम् ।
जघान येन सत्त्वेन हिरण्यकशिपुं हरन् ।
इत्येवं सिंहपूजायां क्रम उक्तो मयानघ ! ॥*॥
नरे स्वगात्ररुधिरे पर्य्यायं शृणु भैरव ! ।
पीठे चेद्दीयते मर्त्यं बलिं दद्यात् श्मशानके ॥
श्मशानं हेरुकाख्यञ्च तत्पूर्व्वं प्रतिपादितम् ।
कामाख्यानिलये शैले तन्त्रादौ विद्धि तत्क्रमम् ॥
मम रूपं श्मशानन्तु भैरवाख्यन्तु कथ्यते ।
तन्त्राङ्गत्वं तपःसिद्धौ त्रिभागन्तु भविष्यति ॥
पूर्व्वांशे भैरवाख्ये तु समुतच्छिन्नरस्य च ।
दक्षिणांशे शिरो दद्यात् भैरव्या मुण्डमालया ॥
रुधिरं पश्चिमांशे तु हेरुकाख्ये नियोजयेत् ।
दत्त्वा संपूज्य च नरं विसृज्यागमनक्रमे ॥
पीठश्मशानेषु बलिं नेच्छेत्तु बलिदायकम् ।
अन्यत्रापि यतो यत्र दीयतेऽयं महाबलिः ॥
तत्राप्यन्यत्र चोत्सृज्य छित्त्वान्यत्र शिरोऽन्ततम् ।
निवेदयेत् साधकस्तु विसृज्य न विलोकयेत् ॥*॥
सुस्नातं मनुजं दीप्तं पूर्व्वाह्ने नियताशनम् ।
मांसमैथुनभोग्येन हीनं स्रक्चन्दनोक्षितम् ॥
कृत्वोत्तरामुखं तन्तु तदङ्गेषु च देवताः ।
पूजयेत्तत्र नाम्ना तु दैवतेन च मानुषम् ॥
ब्रह्मरन्ध्रे तु ब्रह्माणं तन्नासायाञ्च मेदिनीम् ।
कर्णयोस्तु तथाकाशं जिह्वायां सर्व्वतोमुखम् ॥
ज्योतींषि नेत्रयोर्विष्णुं वदने परिपूजयेत् ।
ललाटे पूजयेच्चन्द्रं शक्रं दक्षिणगण्डतः ॥
वामगण्डे तथा वह्निं ग्रीवायां समवर्त्तिनम् ।
केशाग्रे निर्ऋतिं मध्ये भ्रुवोश्चापि प्रचेतसम् ॥
नासामूले च श्वसनं स्कन्धे चापि धनेश्वरम् ।
हृदये सर्पराजन्तु पूजयित्वा पठेदिदम् ॥
नरवर्य्य ! महाभाग सर्व्वदेवमयोत्तम ।
रक्ष मां शरणापन्नं सपुत्त्रपशुबान्धवम् ॥
सराज्यं मां सहामात्यं चतुरङ्गसमन्वितम् ।
रक्षन् परित्यज प्राणान् मरणे नियते सति ॥
महातपोभिर्दानैश्च यज्ञैर्यत् साध्यते नृणाम् ।
तन्मे देहि महाभाग ! त्वञ्चापि प्राप्नुहि श्रियम् ॥
राक्षसाश्च पिशाचाश्च वेतालाद्याः सरीसृपाः ।
नृपाश्च रिपवश्चान्ये न मां ते घ्नन्तु त्वत्कृते ॥
स्वस्कन्धनालगलितैः शोणितैरङ्गसंयुतैः ।
आप्याययात्मवन्त्वा मरणे नियते सति ॥
एवं संपूज्य विधिवन् पूर्व्वतन्त्रेण पूजयेत् ।
पूजितो मनुरूपोऽयं दिक्पालाधिष्ठितो भवेत् ॥
अधिष्ठितस्तथान्यैश्च ब्रह्माद्यैः सकलैः सुरैः ।
हतपापोऽपि मनुजो निष्पापा स तु जायते ॥
तस्य निष्कलुषत्वात्तु पीयूषं शोणितं भवेत् ।
प्रीणाति च महादेवी जगन्माया जगन्मयी ॥
सोऽपि कायं परित्यज्य मानुषं न चिरान्मृतः ।
भवेद्गणानामधिपो ममापि बहुसम्मतः ।
इतोऽन्यथा पापयुतं नराधमयशायुतम् ।
तं बलिं नहि गृह्णाति कामाख्यान्यापि नामनः ॥
अन्येषां महिषादीनां बलीनामथ पूजनात् ।
कायो मेध्यत्वमायाति रक्तं गृह्णाति वै शिवा ।
अन्येभ्योऽपि च देवेभ्यो यदा यद्यत् प्रदीयते ।
तदर्च्चितं प्रदद्यात्तु पूजिताय सुराय वै ॥*॥
काणं व्यङ्गञ्चातिवृद्धं रोगिणञ्च गलस्रवम् ।
क्लीवं हीनाङ्गमथवा बृहल्लिङ्गं गलद्व्रणम् ॥
श्वित्रिणञ्चातिहृस्वञ्च महापातकिनन्तथा ।
अद्वादशकवर्षीयं शिशुं सूतकसंयुतम् ॥
ऊर्द्धं संवत्सराच्चापि महागुरुनिपातिनम् ।
बलिकर्म्मणि चैतांस्तु वर्ज्जयेत् पूजितानपि ।
पशूनां पक्षिणाञ्चापि नराणाञ्च विशेषतः ।
स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात् ॥*॥
संघातबलिदानेषु योषितं पशुपक्षिणोः ।
बलिं दद्यान्नानुयोन्तु त्यक्त्वा संघातपूजितम् ।
न त्रिमासीयकान्न्यूनं पशुं दद्यात् शिवाबलिम् ।
न च त्रिपक्षकान्न्यूनं प्रदद्याद्दे पतत्रिणम् ॥
काणव्यङ्गादिदुष्टन्तु न पशुं पक्षिणन्तथा ।
देव्यै दद्याद्यथा मर्त्यं तथैव पशुपक्षिणौ ।
छिन्नलाङ्गूलकर्णादि भग्नदन्तन्तथैव च ।
भग्नशृङ्गादिकञ्चापि न दद्यात्तु कदाचन ।
न ब्राह्मणं बलिं दद्यात् चाण्डालमपि पार्थिव ! ॥
नोत्सृष्टं द्विजदेवेभ्यो भूपतेस्तनयं तथा ।
रणे न विजितं दद्यात्तनयं रिपुभूभृतः ।
स्वपुत्रं भ्रातरं वापि पितरञ्च विरोधिनम् ।
विट्पतिञ्च न दद्यात्तु भागिनेयञ्च मातुलम् ।
अनुक्तानपि दद्यात्तु तथाप्तातान्स्वगाहितान् ।
उक्तालाभे प्रदद्यात्तु गर्द्दभञ्चोष्ट्रमेव च ।
लाभेऽन्येषां न वितरेद्व्याघ्रमुष्ट्रं खरन्तथा ।
सम्पूज्य विधिवन्मर्त्यं पशुं पक्षिणमेव वा ।
संछिद्य चापि मन्त्रेण मन्त्रेणैव निवेदयेत् ॥*॥
नारं सद्यः शिरोरक्तं देव्याः सम्यङ्निवेदयेत् ।
छागन्तु वामतो दद्यान्माहिषं वितरेत् पुरः ।
पक्षिणं वामतो दद्यादग्रतो देहशोणितम् ।
क्रव्यादानां पशूनान्तु पक्षिणाञ्च शिरोऽध्वनम् ।
वामे निवेदयेत् पार्श्वे जलजानाञ्च सर्व्वशः ।
कृष्णसारस्य कूर्म्मस्य खड्गस्य शशकस्य च ।
ग्राहाद्यानथ मत्स्यानामग्र एव निवेदयेत् ।
सिंहस्य दक्षिणे दद्यात् खड्गिनोऽपि च दक्षिणे ।
पृष्ठदेशे न दद्यात्तु शिरो वा रुधिरं क्वचित् ।
उपसर्गे रणे वापि यथेष्टं वितरेन्नरम् ।
यः कश्चिद्राजपुरुषो नान्यस्मिन्नपि कदाचन ।
बलिदानदिनात् पूर्व्वदिवसे तु बलिं नरम् ।
मानस्तोकेतिमन्त्रेण देवीसूक्तचयेन च ।
गन्धद्वारेत्यनेनापि खड्गशीर्षे निधाय च ।
तस्मिन् खड्गे च गन्धादि दत्त्वा तेनाधिवासयेत् ।
गन्धादिकन्तु खड्गस्य नरे तस्य प्रदापयेत् ।
अम्बेऽम्बिकालि मन्त्रेण रौद्रेण भैरवस्य च ।
एवन्तु संस्कृते मर्त्ये देवी गृह्णाति तं बलिम् ।
न तस्य बाधयञ्चापि कुर्व्वता रक्षसौ न च ।

न सलकं दूषयेत्तं चालुनर्गारमूनादिकम् ॥ ७॥
छिन्नं नरस्य शीर्षन्तु पतितं यत्र यत्र च ।
यत् शुभञ्चाशुभं वापि पश्वादीनाञ्च तत् शृणु ॥
छिन्नं शिरस्तथैशान्यां नारं दिशय राघसे ।
पतितं राज्यहानिञ्च विनाशञ्च विनिर्द्दिशेत् ॥
पूर्व्वाग्नियाम्यवारुण्यवायव्यादिगतं क्रमात् ।
श्रियं पुष्टिं भयं लाभं पुत्त्रलाभं धनं तथा ॥
क्रमाद्विनिर्द्दिशेन्नारं छिन्नशीर्षन्तु भैरव ! ।
उत्तरादिग्गमादेव महिषस्यापि मस्तकः ॥
पतितो वायुकाष्ठान्तं सूचयेद्धयन् शृणुष्व तत् ॥
भोग्यं हानिस्तथैश्वर्य्यं वित्तं रिपुजयो भयम् ।
राज्यलाभं श्रियञ्चापि क्रमात्तद्विद्धि भैरव ! ॥
पशूनाञ्चैव सर्व्वेषां छागादीनामशेषतः ।
एवं फलं क्रमाद्विद्यादृते नलभवाखजौ ॥
अन्यत्र तु श्रियं दद्यात् पतितं प्रातितं शिरः ॥
यः स्यात् कटकटाशब्दो दन्तानां छिन्नमस्तके ।
नराणां पशुपक्ष्यादिग्राहादीनाञ्च रोगदः ॥
लोतकं चक्षुषोर्जातं यदि स्रवति मस्तके ।
छिन्ने नरस्य राज्यस्य तदा हानिं विनिर्द्दिशेत् ॥
माहिषे मस्तके नेत्राद्यदि स्रवति लोतकम् ।
छिन्ने निवेदिते वैरिभूपस्तु तदादिशेत् ॥
चान्येषामथ पश्वादिबलीनां शिरसोऽर्द्दितात् ।
निर्गतं लोतकं धत्ते परां भीतिं गदन्तथा ॥
एषति छिन्नशीर्षश्चेन्नारं स्यात्तु रिपुक्षयः ।
श्रीवृद्धिरायुषो वृद्धिः सदा दातुरसंशयः ॥
यद्यद्वाक्यं निगदति तथा भवति चाचिरात् ।
हुङ्कारादाज्यहानिः स्यात् श्लेष्माबाच पशूताम् ॥
देवानां यदि नामानि भाषते छिन्नमस्तकः ।
विभूतिमतुलां विन्द्यात् वत्सरार्द्धाभ्यन्तरे तदा ॥
रुधिरादानकाले तु शकन्मूत्रे यदि स्रवेत् ।
कार्य्यं तदाथस्योर्द्धं वा दातुः स्यान्मरणं तथा ॥
ब्यांचेपाद्भामपादस्य महारोगः प्रजायते ।
अन्यपादेपचरणैः कल्याणमुपजायते ॥ *॥
महिषस्य तु रक्तस्य मानुषस्याथ साधकः ।
चङ्गुष्ठानामिकाभ्यान्तु किञ्चिदुद्धृत्य भूतले ॥
महाकौशिकमन्त्रेण निक्षिपेद्बलिमुत्तमम् ।
देवेभ्यः पूतनादिभ्यो नैर्ऋत्यां दिशि पूर्व्ववत् ॥
महिषः पञ्चवर्षो यः पञ्चविंशतिवार्षिकः ।
बलिर्द्देयो नरो देवि तस्य रक्तन्तु भूतले ॥
नेत्रबीजचयं कामबीजं छान्तात् प्रजापतिः ।
वह्निर्षीणं पदृस्वराभ्यां संयुक्तञ्च तथापरः ॥
स एवैतासघैतावद्वादिवर्गान्तसंयुतः ।
षष्ठस्वरशिखाविन्दुचन्द्रयुक्तस्तथापरः ॥
हिनांसिकाबीजकान्तः कौशिकोऽयभिमन्त्रयम् ।
एष बलिः स्वाहेति च मन्त्रोऽयं कौशिकः स्मृतः ॥
नृपो वैरिबलिं दद्यात् खड्गमामन्त्र्य पूर्व्ववत् ॥
महिषं वाथवा च्छागं वैरिनाम्नाभिमन्त्र्य च ।
सत्वेण वदनं वद्धा त्रिधा तस्य च मस्तके ।
छित्त्वा तस्योत्तमाङ्गन्तु देव्यै दद्यात् प्रयत्नतः ॥
यदा यदा रिपोर्वृद्धिर्ब्बलिदानं तदापरम् ।
दद्यात्तथा शिरश्छित्त्वा रिपोस्तस्य क्षयाय च ॥
प्राग्प्रतिष्ठाप्य रिपोः कुर्य्यात्तस्मिन् पशावधं ।
तस्मिन् चौर्य्ये रिपुप्राणाः त्वीयन्ते विपदा युताः ॥
आदौ विश्वरूपिणी च चण्डिकेति ततः परम् ।
वैरिगन्त्यमुकश्चेति खादयेत्यमिति तं पुनः ॥
वह्निभार्य्यां ततः पश्चात् खड्गमन्त्रं प्रकीर्त्तितम् ।
स्वयं स वरी यो देवि तमिमं पशुरूपिणम् ॥
विनाशय महामारि स्फें स्फें खादय खादय ॥
इत्यनेन तु मन्त्रेण बलेः शिरसि पुष्पकम् ।
दद्यात्ततस्तद्रुधिरं हस्ताभ्यां निवेदयेत् ।
महानवम्यां शरदि यद्येवं दीयते बलिः ।
तदा तदाष्टाङ्गभवैर्म्मांसैर्होमं समाचरेत् ॥
दुर्गातन्त्रेण मन्त्रेण प्रणीते दहने शुचौ ।
एवं दत्त्वा बलिं मर्त्यो रिपुक्षयमवाप्नुयात् ॥ * ॥
नाभेरधस्ताद्रुधिरं पृष्ठभागस्य च प्रिये ! ।
स्वगात्ररुधिरं दद्यान्न कदाचन साधकः ॥
नीलस्य चिबुकस्यापि नेन्द्रियाणाञ्च मानवः ।
कण्ठाधो नाभितश्चोर्द्धं बाह्वोः पाणिस्तते तथा ॥
प्रदद्याद्रुधिरं वातं नातिकुर्य्याच साधकः ।
गण्डयोश्च ललाटस्य भ्रुवोर्मध्यस्य शोणितम् ॥
कर्णाग्रस्य च बाह्वोश्च स्तनयोरुदरस्य च ।
कण्ठाधो नाभितश्चोर्द्धं हृद्भागस्य यत्नतः ।
पार्श्वयोश्चापि रुधिरं दुर्गायै विनिवेदयेत् ॥
न गुल्फतोऽस्वक् प्रदद्यात् जङ्घोर्नापि च साधकः ।
न च रोगाविलादङ्गान्नान्यघाताच भैरव ! ॥
तदर्थे च कृताघातात् सन्नद्धो युध्यमानतः ।
स्वतं रक्तं प्रदद्यात्तु पद्मपुष्पस्य पत्रके ॥
सौवर्णे राजते पात्रे कांस्ये फाले च मानवः ।
निधाय देव्यै दद्यात्तु तद्रक्तं चन्द्रमल्लकैः ॥
च्छणने छुरिकाखड्गं संकुलादि यदस्त्रकम् ।
घातेन हृदस्तस्य महाफलमवाप्नुयात् ॥
पद्मपुष्पस्य पत्रन्तु यावद्गृह्णाति शोणितम् ।
तत्प्रमाणचतुर्भागाधिकं रक्तन्तु साधकः ।
न कदाचित् प्रदद्यात्तु नाङ्गच्छेदमथाचरेत् ॥
यः स्वहृदयसंजातं मांसं माषप्रमाणतः ।
तिलमुद्गप्रमाणाद्वा देव्यै दत्त्वा तु भक्तितः ।
षण्मासाभ्यन्तरे तस्मात् काममिष्टमवाप्नुयात् ॥
बाह्वोस्तु स्कन्धयोर्व्वापि यो दद्याद्दीपवर्त्तिकाम् ।
हृदये वा स्नेहपात्रं विना भक्त्या तु साधकः ।
क्षणमात्रेण तद्दीपप्रदानस्य फलं शृणु ॥
भुक्त्वा च विपुलान् भोगान् देवीगेहे यथेच्छया ।
कल्पत्रयन्तु संस्थाय सार्व्वभौमो नृपो भवेत् ॥
महिषस्य शिरश्छिन्नं सप्रदीपं शिवापुरः ।
हस्ताभ्यां यः समादाय अहोरात्रञ्च तिष्ठति ॥
स चिरायुः पूतमूर्त्तिरिह भुक्त्वा मनोरमान् ।
भोगांस्तेन मद्गृहगो गणानामधिपो भवेत् ॥
नरस्य शीर्षमादाय साधको दक्षिणे करे ।
वामे सरुधिरं पात्रं गृहीत्वा निशि चाग्रतः ॥
यावद्रात्रं स्थितो मर्त्यो राजा भवति चेह वै ।
स्तते मम पुरं प्राप्य गणानामधिपो भवेत् ॥
क्षणमात्रं बलीनां यः शिरोरक्तं करद्वये ।
गृहीत्वा चिन्तयेद्देवीं पुरस्तिष्ठति मानवः ।
स कामानिह संप्राप्य देवीलोके महीयते ॥
महामाये ! जगन्माये ! सर्व्वकामप्रदायिनि ! ।
ददामि देहरुधिरं प्रसीद वरदा भव ॥
इत्युक्त्वा मूलमन्त्रेण नतिपूर्व्वं विचक्षणः ।
स्वगात्ररुधिरं दद्यान्मानवः सिद्धसन्निभः ॥
येनात्ममांसं सत्येन ददामीश्वरि ! भूतये ।
निर्व्वाणं तेन सत्येन देहि हुं हुं नमो नमः ॥
इत्यनेन तु मन्त्रेण स्वमांसं वितरेद्बुधः ।
सौभाग्यं सुखसम्पन्नं प्रदीपं परमं शुचिम् ॥
दीपयन् मांसमिद्धनं दीपं द्रौं द्रौं नमो नमः ।
इत्यनेन तु मन्त्रेण दीपं दद्याद्विचक्षणः ॥
महानवम्यां शरदि रात्रौ स्कन्दविशाखयोः ।
यवचूर्णमयं कृत्वा रिपुं म्लेच्छमथैव वा ॥
शिरश्छित्त्वा बलिं दद्यात् कृत्वा तस्य तु मन्त्रतः ।
अनेनैव तु मन्त्रेण खड्गमामन्त्र्य यत्नतः ॥
रक्तं किलकिली घोरघोरा धारविहिंसकः ।
ब्रह्मशिरस्थाक्षिकाशिरवमस्तकथारिसत्तमम् ॥
भान्तो विसर्गसहितः स च विन्दुयुतोऽपरः ।
अक्षाग्नियोगस्कन्देय विन्दुना च समन्वितः ।
शिरश्छित्त्वा बलिं दद्यात् कृत्वा तस्य तु मन्त्रतः ॥
अनेनैव तु मन्त्रेण विन्दुना च समन्वितः ।
फडन्तो बलिषु प्रोक्तः खड्गः स्कन्दविशाखयोः ॥
रक्तद्रवैः सेचयित्वा कृत्रिमं तं रिपुं बलिम् ।
कुचन्दनस्य तिलकं ललाटेऽभिनिवेशयेत् ॥
रक्तमाल्यधरं कृत्वा रक्तवस्त्रधरन्तथा ।
कण्ठे बद्धा रक्तसूत्रैर्नाभौ शल्यञ्च कृत्रिमम् ।
दत्त्वोत्तरशिरः स्कन्धं कृत्वा खड्गेन छेदयेत् ॥
शिरस्तस्य ततो दद्यात् स्कन्दाय ते नमस्ततः ।
चतुर्द्दशस्वराभ्यां संसक्तः स परः समः ॥
म्रतनः परतः पूर्व्वं चन्द्रविन्दुसमन्वितः ।
स्कन्दस्य मूलमन्त्रोऽयं तेन तस्मै बलिं क्षिपेत् ॥
चतुर्द्दशस्वराभ्यां पद्वतीयन्तु पूर्व्ववत् ।
प्रोक्तो विशाखमन्त्रोऽयं तेन तस्मै बलिं क्षिपेत् ॥
कुटिलाक्षौ कृष्णपिङ्गवर्णौ रक्तांशुधारिणौ ।
त्रिशूलं करवालञ्च पाणिभ्यां दक्षिणे तथा ॥
बिभ्रतौ वृकपाशञ्च कर्त्तृकञ्चापि वामतः ।
त्रिनेत्रौ नरमुण्डानां मालामुरसि बिभ्रतौ ॥
विकटौ दशनैर्भीमैर्गणेशौ द्वारपालकौ ।
ध्यानेन चिन्तयेद्देव्याः पुरतः संस्थितौ सदा ॥
चैत्रे माघि सिते पक्षे चतुर्द्दश्यां विशेषतः ।
बलिभिर्महिषैश्छागैर्मांषैर्भैरवरूपिणम् ।
तोषयेन्मधुभिर्मत्स्यैस्तेन तुष्यास्यहं सुतौ ॥
चण्डिकाबलिदानेन बलेः शीर्षं फलेन तु ।
अभिषिच्य तु मन्त्रेण मूलेनैव निवेदयेत् ॥
ईषत् प्रायन्तु बहुधा चालितं पूर्व्वमर्धितम् ।
वीक्षेत् कामस्य सिद्धिन्तु सिद्धाभावञ्च साधकः ॥
सितप्रेतो रथस्थोऽयं योगपीठस्य सन्निभः ।
ध्यायेद्यस्मिन् महामाया सिद्धिं बोधयते नरः ॥
अनेनामन्त्रितं शीर्षं न चिराद्यदि वेपते ।
तत्कार्य्यस्य तदा सिद्धिरसिद्धिस्तु विपर्य्ययात् ॥
एवं दद्बलिं वीरो यथोक्तविधिनामुना ।
बलिदानादेव चतुर्वर्गमाप्नोत्यसंशयम् ॥

एवं वलिप्रदानस्य क्रमो रूपन्तयैव च ।
कथितो रुधिराध्याय उपचारान् शृणुष्व मे ॥”
इति कालिकापुराणे ६६ अध्यायः ॥
वलिदाननिषेधो यथा,—
“जीवानुकम्पां विज्ञातुं ततो दुर्गां सदाशिवः ।
पप्रच्छ परमप्रीत्या गूढ़मेनद्वचो मुदा ॥
सर्व्वे विष्णुमया जीवास्त्वद्भक्ताश्च कथं शिवे ! ।
श्रुतं मया तवोद्देशे कुर्य्युः कामनया वधम् ।
महान् सन्देह इति मे ब्रूहि भद्रे ! सुनिश्चितम् ॥
शङ्करी तद्वचः श्रुत्वा शिववक्त्रविनिर्गतम् ।
भीतात्यन्तं हि ब्रह्मर्षे ! प्रत्युवाच सदाशिवम् ॥
श्रीपार्व्वत्युवाच ।
ये ममार्च्चनमित्युक्ता प्राणिहिंसनतत्पराः ।
तत्पूजनं ममामेध्यं यद्दोषात्तदधोगतिः ॥
मदर्थे शिव ! कुर्व्वन्ति तामसा जीवघातनम् ।
आकल्पकोटिनिरये तेषां वासो न संशयः ॥
मम नाम्नाथवा यज्ञे पशुहत्यां करोति यः ।
क्वापि तन्निष्कृतिर्नास्ति कुम्भीपाकमवाप्नुयात् ॥
दैवे पैत्रे तथात्मार्थे यः कुर्य्यात् प्राणिहिंसनम् ।
कल्पकोटिशतं शम्भो ! रौरवे स वसेत् ध्रुवम् ॥
यो मोहान्मानसैर्देहिहत्यां कुर्य्यात् सदाशिव! ।
एकविंशतिकल्पञ्च तत्तद्योनिषु जायते ॥
यज्ञे यज्ञे पशून हत्वा कुर्य्यात शोणितकर्द्दमम् ।
स पचेन्नरके तावद्यावल्लोमानि तस्य वै ॥
हन्ता कर्त्ता तथोत्सर्गकर्त्ता धर्त्ता तथैव च ।
तुल्या भवन्ति सर्व्वे ते ध्रुवं नरकगामिनः ॥
ममोद्देशे पशून् हत्वा सरक्तं पात्रमुत्सृजेत् ।
यो मूढ़ः स तु पूयोदे वसेद्दर्षाद न संशयः ॥
देवतान्तरमन्नाम्न्याजेन स्वेच्छया तथा ।
हत्वा जीवांश्च यो भक्षेत् नित्यं नरकमाप्नुयात् ॥
यूपे बद्धा पशून् हत्वा यः कुर्य्याद्रक्तकर्द्दमम् ।
तेन चेत् प्राप्यते स्वर्गो नरकं केन गम्यते ॥
उपदेष्टा वधे हन्ता कर्त्ता धर्त्ता च विक्रयी ।
उत्सर्गकर्त्ता जीवानां सर्व्वेषां नरकं भवेत् ॥
मध्यस्थस्य वधायापि प्राणिनां क्रयविक्रये ।
तथा दष्टुश्च सूनायां कुम्भीपाको भवेद्ध्रुवम् ॥
स्वयं कामाशयो भूत्वा योऽज्ञानेन विमोहितः ।
हन्त्यन्यान् विविधान् जीवान् कुर्य्यान्मन्नाम
शङ्कर ! ॥
तद्राज्यवंशसम्पत्तिज्ञातिदारादिसम्पदान् ।
अचिराद्वै भवेन्नाशो न्तत: स नरकं व्रजेत् ॥
दैवयज्ञे पितृश्राद्धे तथा माङ्गल्यकर्म्मणि ।
तस्यैव नरके वासो यः कुर्य्याज्जीवघातनम् ॥”
तथा ।
“मद्याजेन पशून् हत्वा यो भक्षेत् सह
बन्धुभिः ।
तद्गात्रलोमसंख्याब्दैरसिपत्रवने वसेत् ॥
आवयोरन्यदेवानां नाम्ना च परकर्म्मणि ।
यः संपोष्य पशून् हन्यात् सोऽन्धतामिस्रमा-
प्नुयात् ॥
पशून् हत्वा तथा त्वां मां योऽर्च्चयेत्मांसशो-
णितैः ।
तावत्तन्नरके वासो यावच्चन्द्रदिवाकरौ ॥
निर्व्वह्निभस्मतुल्यं तत् बहुदर्थेण यत् कृतम् ।
यस्मिन् यज्ञे प्रभो शम्भो ! जीवहत्या भवेद्
ध्रुवम् ॥
यज्ञमारभ्य चेत् शक्रः कुर्य्याद्वै पशुघातनम् ।
स तदाधोगतिं गच्छेदितरेषाञ्च का कथा ॥
आवयोः पूजनं मोहाद्ये कुर्व्वन्ति मांसशोणितैः ।
पतन्ति कुम्भीपाके ते भवन्ति पशवः पुनः ॥
फलकामास्तु वेदोक्तैः पशोरालभनं मखे ।
पुनस्तत्तत् फलं भुक्ता ये कुर्व्वन्ति पतन्त्यधः ॥
स्वर्गकामोऽश्वमेधं यः करोति निगमाज्ञया ।
तद्भोगान्ते पतत्यधः स जन्मानि भवार्णवे ॥
ये हताः पशवो लोकैरिह स्वार्थेषु कोविदैः ।
ते परत्र तु तान् हन्युस्तथा खड्गेन शङ्कर ! ॥
आत्मपुत्त्रकलत्रादिसुसम्पत्तिकुलेच्छया ।
यो दुरात्मा पशून् हन्यादात्मादीन् घातयेत्
स तु ॥
जानन्ति नो वेदपुराणतत्त्वं
ये कर्म्मठाः पण्डितमानयुक्ताः ।
लोकाधमास्ते नरके पतन्ति
कुर्व्वन्ति मूर्खाः पशुघातनञ्चेत् ॥
येऽज्ञानिनो मन्दधियोऽकृतार्था
भवे पशुं घ्नन्ति न धर्म्मशास्त्रम् ।
जानन्ति नाकं नरकं न मुक्तिं
गच्छन्ति घोरं नरकं नरास्ते ॥
शुद्धा अकार्य्या न विदन्ति शास्त्रा
न धर्म्ममार्गं परमार्थतत्त्वम् ।
पापं न पुण्यं पशुघातका ये
पूयोदवासो भवतीह तेषाम् ॥
जीवानुकम्पां न विदन्ति मूढ़ा
भ्रान्ताश्च येऽसत्पथिनो न धर्म्मम् ।
स्मार्त्ता भवे प्राणिवधं न कुर्य्यु-
स्ते यान्ति मत्तराः खलु रौरवाख्यम् ॥
ततस्तु खलु जन्तूनां घातनं नो करिष्यति ।
शुद्धात्मा धर्म्मवान् ज्ञानी प्राणान्ते नैव मानवः ॥
यदीच्छेदात्मनः क्षेमं त्यक्ता ज्ञानं तदा नरः ।
जीवान् कानपि नो हन्यात् सङ्कटापन्न एव चेत् ॥
सम्पत्तौ च विपत्तौ वा परलोकेच्छुकः पुमान् ।
कदाचित् प्राणिनो हत्यां न कुर्य्यात्तत्त्ववित्
सुधीः ॥
मानवो यः परत्रेह तत्त्वमिच्छेत् सदाशिव ! ।
सर्व्वविष्णुमयत्वेन न कुर्य्यात् प्राणिनां वधम् ॥
वधाद्रक्षति यो मर्त्यो जीवान् तत्त्वज्ञधर्म्मवित् ।
किं पुण्यं तस्य वक्ष्येऽहं ब्रह्माण्डं स तु रक्षति ॥
यो रक्षेत् घातनात् शम्भो ! जीवमात्रं दया-
परः ।
कृष्णप्रियतमो नित्यं सर्व्वरक्षां करोति सः ॥
एकस्मिन् रक्षिते जीवे त्रैलोक्यं तेन रक्षितम् ॥
वधात् शङ्कर ! वै येन तस्मादर्च्चेन्न घातयेत् ॥”
तथा,—
“पशुहिंसा विधिर्यत्र पुराणे निगमे तथा ।
उक्तो रजस्तमोभ्यां च केवलं तमसापि वा ॥
नरकस्वर्गसेवार्थं संसाराय प्रवर्त्तितः ।
यतस्तत्कर्म्मभोगेन गमनागमनं भवेत् ॥
सत्येन सात्त्वतग्रन्थे च विधिर्नैव शङ्कर ! ।
प्रवृत्तितो निवृत्तिस्तु यत्रापि सात्त्विकी क्रिया ।
एवं नानाविधं कर्म्म पशोरालभनादिकम् ।
कामाश्रयः फलाकाङ्क्षी हत्वाज्ञानेन मानवः ॥
पश्चाज्ज्ञानासिना छित्त्वा मायापाशं तामसं
सदा ।
यमभीतिहरं भक्त्या यदि गोविन्दमाश्रयेत् ॥”
इति पाद्मोत्तरखण्डे । १०४।१०५ । अध्यायौ ।
व(ब)लिः, स्त्री, ( वलति संवृणोतीति । वल संवरणे + इन् । ) जरया श्लथचर्म्म । तत्पर्य्यायः । चर्म्मतरङ्गः २ त्वगूर्म्मिः ३ त्वक्तरङ्गः ४ । इति राजनिर्घण्टः ॥ जठरावयवः । ( यथा, कुमारे । १ । ३९ ।
“मध्येन सा वेदिविलग्नमध्या
वलित्रयं चारु बभार वाला ॥” )
गृहदारुप्रभेदः । इति मेदिनी । ले, ५ ॥ गुदाङ्कुरः । यथा,—
“पञ्चात्मा मारुतः पित्तं कफो गुदवलित्रयम् ।
सर्व्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ।
सर्व्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥*॥
वाह्यायान्तु वलौ जातान्येकदोषोल्वणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥
द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितान्यपि ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥
सहजानि त्रिदोषाणि यानि चाभ्यन्तरा वलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्द्दि-
शेत् ॥”
इति माधवकरः ॥
( यथा च । “तत्र स्थूलान्त्रप्रतिबद्धमर्द्धपञ्चाङ्गुलं गुदमाहुस्तस्मिन् वलयस्तिस्रोऽध्यर्द्धाङ्गुलान्तरभूताः प्रवाहणी विसर्ज्जनी संवरणी चेति । चतुरङ्गुलायताः सर्व्वास्तिर्य्यगेकाङ्गुलोच्छ्रिताः । शङ्खावर्त्तनिभाश्चापि उपर्य्युपरि संस्थिताः । गजतालुनिभाश्चापि वर्णतः संप्रकीर्त्तिताः ॥”
इति सुश्रुते निदानस्थाने द्वितीयेऽध्याये ॥
गन्धकः । तत्पर्य्यायो यथा,—
“गन्धको गन्धिकश्चापि गन्धपाषाण इत्यपि ।
सौगन्धिकश्च कथितो बलिर्व्वलरसापि च ॥”
इति भावप्रकाशस्य पूर्व्वखण्डे प्रथमे भागे ॥ )
वलिका, स्त्री, ( वलेव । वला + स्वार्थे कन् । टापि अत इत्वम । ) अतिवला । इति राजनिर्घण्टः ॥
वलिदानं, क्ली, ( वलेः पूजोपकरणस्य देवतोद्देशेन संकल्पितच्छागादेर्वा दानम् । ) श्रीकृष्णपार्षदेभ्यस्तन्निवेदितनैवेद्यांशदानम् । यथा,—
अथ वलिदानम् ।
“ततो यवनिकां विद्वानपसार्य्य यथाविधि ।
विष्वक्सेनाय भगवन्नैवेद्यांशं निवेदयेत् ॥
यथा च पञ्चरात्रे श्रीनारदवचनम् ।

विष्वक्सेनाय दातव्यं नैवेद्यं तच्छतांशकम्।
पादोदकं प्रसादञ्च लिङ्गे चण्डेश्वराय च ॥ * ॥
तद्विधिश्चोक्तः।
सुधार्द्दीशाननः पात्रान्नैवेद्यांशं समुद्धरेत्।
सर्व्वदेवस्वरूपाय पराय परमेष्ठिने ॥
श्रीकृष्णसेवायुक्ताय विष्वक्सेनाय ते नमः।
इत्युक्ता श्रीहरेर्नाम्ना तीर्थाक्तं समर्पयेत्।
शतांशं वा सहस्रांशमन्यथा निष्फलं भवेत् ॥
पश्चाच्च बलिरित्यादिश्लोकाद्युच्चार्य्य वैष्णवः।
सर्व्वेभ्यो वैष्णवेभ्यस्तं शतांशं विनिवेदयेत् ॥ * ॥
तौ च श्लोकौ।
बलिर्विभीषणो भीष्मः कपिलो नारदोऽर्ज्जुनः।
प्रह्लादश्चाम्बरीषश्च वसुर्वायुसुतः शिवः ॥
विष्वक्सेनोद्धवाक्रूराः सनकाद्याः शुकादयः।
श्रीकृष्णस्य प्रसादोऽयं सर्व्वे गृह्णन्तु वैष्णवाः ॥ इति।
इदं यद्यपि युज्येत दर्पणापणतः परम्।
तथापि भक्तवात्सल्यात् कृष्णस्यात्रापि सम्भवेत्।
अथ बलिदानमाहात्म्यम्। नारसिंहे।
ततस्तदन्नशेषेण पार्षदेभ्यः समन्ततः।
पुष्पाक्षतैर्विमिश्रेण बलिं यस्तु प्रयच्छति ॥
बलिना वैष्णवेनाथ तृप्ताः सन्तो दिवौकसः।
शान्तिं तस्य प्रयच्छन्ति श्रियमारोग्यमेव च ॥”
इति श्रीहरिभक्तिविलासे ८ विलासः ॥
देवोद्देशेन यथाविधिपूजोपहारत्यागः। दुर्गादिदेवतोद्देशेन सङ्कल्पपूर्व्वकच्छागादिपशुघातनम्। यथा,—
“बलिदानेन सततं जयेच्छत्रून् नृपान् नृप ! ॥”
इति कालिकापुराणम् ॥
अस्य विधिनिषेधौ बलिशब्दे द्रष्टव्यौ ॥ * ॥
अथ बलिदानक्रमः। स्वयमुत्तराभिमुखः पूर्व्वाभिमुखं बलिं अव्यङ्गावयवं सुन्दरं हृष्टपुष्टं माल्यं कण्ठे वेष्टयित्वा स्नातं समानीय कृताञ्जलिः पठेत्।
“ॐ वाराणसी यमुना गङ्गा करतोया सरस्वती।
कावेरी चन्द्रभागा च सिन्धुभैरवसागराः ॥
पशुस्नानविधानाय सान्निध्यमिह कल्पय ॥”
इति तीर्थान्यावाह्य ॐ अग्निः पशुरासीत्तेनायजन्त स एतल्लोकमजयद्यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः। ॐ वायुः पशुरासीत्तेनायजन्त स एतल्लोकमजयद्यस्मिन् वायुः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः। ॐ सूर्य्यः पशुरासीत्तेनायजन्त स एतल्लोकमजयत् तस्मिन् सूर्य्यः स ते लोको भविष्यति तं जेष्यसि पिबैता अपः। ॐ वाचन्ते शुन्धामि प्राणांस्ते शुन्धामि श्रोत्रन्ते शुन्धामि मेढ्रन्ते शुन्धामि पायुन्ते शुन्धामि। मनस्त आप्यायतां वाक् त आप्यायतां प्राणस्त आप्यायतां चक्षुस्त आप्यायतां श्रोत्रन्त आप्यायतां यत्ते क्रूरं यदास्थितं तत्त आप्यायतां तत्ते निष्टायतां तत्ते शुध्यतु शमहोभ्यः स्वाहा। इति मन्त्रैः स्नापयित्वा ॐ नेपालाररक्तभमसि पशुं बन्धय बन्धय गन्धाद्यावयवं पशुं बन्धय बन्धय अंशाद्यवयवरूपस्तम्भे पशुं बन्धय बन्धय हूः फट् स्वाहा ॐ ह्रां ह्रीं ह्रूं चां चण्डिकायै इमं पशुं प्रोक्षामि स्वाहा। इति प्रोक्षणम्। ततः सर्व्वाङ्गावयवं पशुं मोक्षं कुरु कुरु स्वाहेति मोक्षं कृत्वा हुमस्त्वेति ललाटे सिन्दूरं दत्त्वा ॐ छागपशवे नम इति पाद्यादिकं दत्त्वा एतदधिपतये ॐ अग्नये नमः एतत्सम्प्रदानीयायै ह्रीं दुर्गायै नमः इति पुष्पं दत्त्वा पशोरङ्गदेवताः पूजयेत्। यथा, शिरसि ॐ रुधिरवदनायै नमः ललाटे ॐ शाङ्करिण्यै नमः भ्रूमध्ये ॐ भद्रायै नमः चक्षुषोः ॐ त्रिनेत्रायै नमः कर्णयोः ॐ पार्व्वत्यै नमः घ्राणे ॐ गौर्य्यै नमः चिबुके ॐ चण्डिकायै नमः दन्तपङ्क्तौ ॐ उग्रचण्डिकायै नमः जिह्वायां ॐ चण्डघण्टायै नमः मुखे ॐ विरूपाक्षायै नमः ग्रीवायां ॐ चण्डायै नमः। पृष्ठे ॐ महाभैरव्यै नमः उदरे ॐ वैष्णव्यै नमः चतुष्पदे ॐ चण्डप्रियायै नमः पार्श्वयोः ॐ सर्व्वेश्वर्य्यै नमः कटिदेशे ॐ विरूपाक्षायै नमः खुराग्रे ॐ कौशिक्यै नमः लाङ्गूले ॐ प्रहपिण्यै नमः सर्व्वाङ्गेषु पश्वधिष्ठातृदेवताभ्यो नमः। इति संपूज्य उत्सर्गेन। विष्णुः ॐ तत् सदद्याश्विने मासि शुक्ले पक्षे अमुकतिथौ वार्षिकशरत्कालीनदुर्गामहोत्सवे अमुकगोत्रस्य श्रीअमुकस्य दुर्गाप्रीतिकामनया दुर्गादेव्यै इमं पशुं वह्निदैवतं तुभ्यमहं घातयिष्यामि इत्युत्सृज्य कृताञ्जलिः पठेत्।
“ॐ छाग ! त्वं बलिरूपेण मम भाग्यादुपस्थितः।
प्रणमामि ततः सर्व्वरूपिणं बलिरूपिणम् ॥
यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा।
अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः ॥
पशुयोनिप्रसूतोऽसि पूजाहोमादिकर्म्मसु।
तुष्टा भवतु सा देवी सरक्तपिशितैस्तव ॥
चण्डिकाप्रीतिदानेन दातुरापद्विनाशनः।
चामुण्डाबलिरूपाय बले ! तुभ्यं नमोऽस्तु ते ॥”
ततः “पशुपाशाय विद्महे शिरश्छेदाय धीमहि।
तन्नः पशुः प्रचोदयात्।” इति कर्णे जपेत्।
ततः खड्गमानीय ह्रीं इति बीजाक्षरं लिखित्वा ध्यायेत्।
“कृष्णं पिनाकपाणिञ्च कालरात्रिस्वरूपिणम्।
उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम् ॥
रक्ताम्बरधरञ्चैव पाशहस्तं कुटुम्बिनम्।
पिबमानञ्च रुधिरं भुञ्जानं क्रव्यसंहतिम् ॥”
एवं खड्गं ध्यात्वा गृहीत्वा,
“ॐ रसनात्वं चण्डिकायाः सुरलोकप्रसाधकः।”
इत्यभिमन्त्र्य ऐं ह्रीं खड्गाय नम इति पाद्यादिभिः संपूज्य पुनर्मुष्टौ ॐ महादेवाय नमः। धारे ॐ यमाय नमः। अग्रे ॐ ब्रह्मणे नमः।
“ॐ असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः।
श्रीगर्भो विजयश्चैव धर्म्मपाल ! नमोऽस्तु ते ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा।
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥
हिरण्यञ्च शरीरन्ते धाता देवो जनार्द्दनः।
पिता पितामहो देवस्त्वं मां पालय सर्व्वदा ॥
नीलजीमूतसङ्काशस्तीक्ष्णदंष्ट्रः कृशोदरः।
भावशुद्धो मर्षणश्च अतितेजास्तथैव च ॥”
ॐ तीक्ष्णदंष्ट्राय नम इति पुष्पं दत्त्वा आं ह्रीं फट् इति खड्गमादाय ॐ कालि कालि वज्रेश्वरि लौहदण्डायै नम इति जपित्वा छागस्य ग्रीवायां खड्ग ! त्वं शीघ्रं छिन्धि छिन्धि फट् फट् स्वाहा। इति पूर्व्वाभिमुखं बलिं स्वयमुत्तरामुखः उत्तराभिमुखं बलिं स्वयं पूर्व्वाभिमुखो वा सकृत्प्रहारेण छिन्द्यात्। ततो मृण्मयादिपात्रे रुधिरमादाय चतुर्भागं कृत्वा ऐशान्यां ॐ विदारिकायै नमः आग्नेय्यां ॐ पूतनायै नमः नैरृत्यां ॐ पापराक्षस्यै नमः वायव्यां ॐ कौशिक्यै नमः। ॐ तत् सदद्यामुके मासि अमुकपक्षेऽमुकतिथौ वार्षिकशरत्कालीनदुर्गामहोत्सवे अमुकगोत्रस्य श्रीअमुकस्य दशवर्षावच्छिन्नश्रीदुर्गाप्रीतिकामः श्रीदुर्गादेव्यै छागपशुरुधिरं दास्यामि इति सङ्कल्प्य।
ॐ कालि कालि महाकालि कालिके पापनाशिनि।
शोणितञ्च बलिं गृह्ण वरदे वामलोचने ॥”
एष रुधिरबलिः ॐ दुर्गायैति मन्त्रेण दद्यात्।
ततः ऐं ह्रीं श्रीं कौशिकि रुधिरेणाप्यायतामिति वदेत्। ततः शिरसि ज्वलद्दशां दत्त्वा ॐ तत् सदद्यामुके मास्यमुकपक्षेऽमुकतिथौ वार्षिकशरत्कालीनदुर्गामहोत्सवे अमुकगोत्रस्य श्रीअमुकस्य श्रीमद्दुर्गादर्शनाभिवन्दनस्पर्शनाभिपूजनस्नपनतर्पणजनितपूर्व्वपूर्व्वाधिकपुण्यप्राप्तिकामो दुर्गादेव्यै सप्रदीपच्छागपशुशीर्षं दास्यामीति सङ्कल्प्य एष सप्रदीपच्छागपशुशीर्षबलिः ह्रीं दुर्गायै नम इत्युत्सृजेत्।
“ॐ जय त्वं सर्व्वभूतेशि सर्व्वभूतसमावृते।
रक्ष मां निजभूतेभ्यो बलिं भुङ्क्ष्व नमोऽस्तु ते ॥
ततः खड्गरुधिरमादाय।
“ॐ यं यं स्पृशामि पादेन यं यं पश्यामि चक्षुषा।
स स मे वश्यतां यातु यदि शक्रसमो भवेत् ॥”
इति ललाटे तिलकं कुर्य्यात्। मेषघाते तु मेषेत्युहेन वोच्यम्। मेषरुधिरदाने तु एकवर्षावच्छिन्नदुर्गाप्रीतिकामः। प्रभूतबलिदाने तु द्वौ वा त्रीन् वा अग्नतः कृत्वा संप्रोक्ष्य एतान्पशुभ्यो नम इति संपूज्य छाग त्वमित्येकवचनानूहेन प्रयोगः। पश्वन्तरेऽप्येवम्। वाक्ये तु एतान् पशून् तुभ्यमहं घातयिष्ये। रुधिरदाने तु एतान् रुधिरबलीन् दास्यामि इति सङ्कल्प्य प्रत्येकेन दद्यात् शीर्षदानमप्येवम्। ततो हृष्टमनाः यथाशक्ति नृत्यं समर्प्य प्रदक्षिणं कुर्य्यादिति नन्दिकेश्वरपुराणोक्तपद्धतिः ॥ * ॥

अथ तान्त्रिकवलिदानविधिः। "तत्र सुलक्षणं पशुं देव्यग्रे संस्थाप्य वक्ष्यमाणविधिना उत्सृजेत्। तदुक्तं यामले।

'देव्यग्रे स्थापयित्वा तु पशुं लक्षणसंयुतम्।
अन्नसर्षपविक्षेपात् भूतानुत्सारयेत्ततः॥'

अर्घोदकेन संप्रोक्ष्य अस्त्रेण संरक्ष्य कवचेनावगुण्ठ्य धेनुमुद्रयामृतीकृत्य गन्धपुष्पाद्यैः पशुं संपूज्य मूलेन सप्तधा तत्त्वमुद्रया प्रोक्षणं कृत्वा कर्णे इमं मन्त्रं पठेत्। पशुपाशाय विद्महे विश्वकर्मणे धीमहि तन्नो जीवः प्रचोदयात्। ततो ह्रीं कालि कालि वज्रेश्वरि लौहदण्डायै नम इति मन्त्रेण खड्गं पूजयेत्। ततः खड्गस्याग्रमध्यमूलं क्रमेण पूजयेत्। यथा ह्रूं वागीश्वरीब्रह्मभ्यां नमः। ह्रूं लक्ष्मीनारायणाभ्यां नमः। ह्रूं उमामहेश्वराभ्यां नमः। ततो ब्रह्मविष्णुशिवशक्तियुक्ताय खड्गाय नमः। इति सर्व्वत्र पूजयित्वा प्रणमेत्।

'खड्गाय खरग्राणाय शक्तिकार्य्यार्थतत्पर।
पशुश्छेद्यस्त्वया शीघ्रं खड्गनाथ! नमोऽस्तु ते॥'

ततो महावाक्यं अमुकदेवताप्रीतिकामः अमुकदेव्यै इमं पशुं तुभ्यमहं संप्रददे। ततो निवेदयेत्।

'यथोक्तेन विधानेन तुभ्यमस्तु समर्पितम्॥'

ततो वलिं छिन्द्यात्। ततो रुधिरं समांसं देव्यै दद्यात्। ततोऽवशिष्टं वटुकादिभ्यो वलिं दद्यात् यथा ह्रूं वां वटुकाय नमः। इति गन्धादिभिः संपूज्य पूर्व्ववन्मन्त्रेण वायव्यां वलिं दद्यात्। ह्रूं यां योगिनीभ्यो नमः इति संपूज्य पूर्व्ववन्मन्त्रेण ईशाने वलिं दद्यात्। ह्रूं क्षां क्षेत्रपालाय नमः इति संपूज्य पूर्व्ववन्मन्त्रेण नैरृत्यां वलिं दद्यात्। ह्रूं गां गणपतये नमः इति संपूज्य पूर्व्ववन्मन्त्रेण आग्नेय्यां गणेशाय वलिं दद्यात्।" इति तन्त्रसारः॥ * ॥ (ननु "मा हिंस्यात् सर्व्वा भूतानि" "अहिंसा परमो धर्म्मः।" इत्यादि वचनात् दर्शयेव सर्व्वथा हिंसा कार्य्यं तर्हि हिंसाप्रवृत्तिः स्वभावतनकत्वेन शास्त्रेणोपदिष्टा नतोच्यते। अथ वैधहिंसाविचारः। 'मा हिंस्यात् सर्व्वाभूतानि' इत्यत्र सर्व्वशब्दस्य व्यापकार्थपरतया एतद्विधिमनुसृत्य 'वायव्यं श्वेतमालभेत' इत्यादि विधेर्विषयप्राप्तेरगत्या संकोचात् इतरविषयत्वं सर्व्वाः सर्व्वाणि छन्दांसि यतन्त सत्पद्य स्थितम्। यद्यपि नाना दर्शनटीकाकाङ्क्षितविचारातिमिश्रैस्तत्त्वर्क्षसुधाम् अभिहितं न च 'मा हिंस्यात् सर्व्वाभूतानि' इति सामान्यशास्त्रं विशेषशास्त्रेण 'अग्नीषोमीयं पशुमालभेत' इत्यनेन वाध्यते इति वाच्यं विरोधाभावात्। विरोधे हि वलीयसा दुर्ब्बलं वाध्यते। न चास्ति विरोधः भिन्नविषयत्वात्। तथाहि 'मा हिंस्यात्' इति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्वर्थत्वमपि। न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः। हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीत्यन्तेन तदपि सांख्यनये। मीमांसकमते तु विरोध एव तथाहि गुरुनये न खलु सर्व्वभूतहिंसाभावविषयकं कार्य्यं इति निषेधविध्यर्थस्य वाधं विना अग्निषोमीयपश्वालभनविषयकं कार्य्यमिति भावविध्यर्थ उपपद्यते। भट्टनये तु अङ्गे यथा तथास्तु। न च मुख्यपशुयागे पुरुषार्थैकपशुहिंसनस्यार्थसाधनत्वं अनर्थसाधनत्वञ्चोपपद्यते विरोधात्। वस्तुतस्तु अङ्गेऽपि विरोधोऽस्त्येव क्रतौ विधेरेव स्वभावो यः स्वविषयस्य साक्षात् परम्परया वा पुरुषार्थसाधनत्वमवगमयति अन्यथाङ्गानां प्रधानोपकारकत्वमपि नाङ्गीक्रियेत। अर्थसाधनत्वं वलवदनिष्टाननुवन्धीष्टसाधनत्वं अनर्थसाधनत्वं वलवदनिष्टसाधनत्वं न चानयोरेकत्र समावेश इति। अतएवोक्तं 'तस्माद्यज्ञे वधोऽवधः' इति। नन्वेवं 'श्येनेनाभिचरन् यजेत' इत्यत्र श्येनस्य शत्रुवधरूपेष्टसाधनत्वमवगतं 'अभिचारो मूलकर्म्म च।' ११।६३। इति मनुना उपपातकगणमध्ये पाठात् अनिष्टसाधनत्वमवगतम्। तदेतदुभयमुपपन्नमिति चेन्नैवं 'आततायिनमायान्तं हन्यादेवाविचारयन्।' ८।३५०। इत्येकवाक्यतया आततायित्वे इष्टसाधनत्वं अनाततायित्वे तूपपातकत्वेन वलवदनिष्टसाधनत्वमित्यविरोध एव॥" इति तिथितत्त्वम्॥)

व(ब)लिध्वंसी, [न्] पुं, (वलिं तदाख्यं प्रसिद्धं दैत्यविशेषं ध्वंसयतीति। वलि+ध्वंस+णिनि। वामनरूपेण वलेः सर्व्वस्वग्रहणादस्य तथात्वम्। यद्वा, वलिना पूजोपहारेण अविद्यां ध्वंसयितुं शीलमस्य।) विष्णुः। इत्यमरः।१।१।२१॥ (भगवता वामनरूपधरेण वलिकृतयज्ञगमनपूर्व्वकं तत्सकाशात् सर्व्वस्वं गृहीतमित्येतत्कथा वलिशब्दे द्रष्टव्या॥)

व(ब)लिनः, त्रि, (वलिः शिथिलं चर्म्म अस्यास्तीति। वलि+पामादित्वान्नः।) वलिभः। जरया श्लथचर्म्मयुक्तः। इत्यमरः।२।६।४५॥

व(ब)लिनन्दनः, पुं, (वलेस्तदाख्यस्य प्रसिद्धस्य दैत्यस्य नन्दनः पुत्रः।) वाणासुरः। इति शब्दरत्नावली॥ (अयं खलु यादवश्रेष्ठेन भगवता कृष्णेन सह युद्धमकरोत्। तत्प्रतापवशीभूतो महादेवश्च स्वयमस्य दौवारिकत्वञ्चकार। तद्विवरणादिकं हरिवंशे १७३ अध्यायमारभ्य १८३ अध्यायपर्य्यन्तं द्रष्टव्यम्॥ वलेः ययातिवंशीयस्य राज्ञः नन्दनः क्षेत्रजः पुत्रः इति व्युत्पत्त्या अङ्गवङ्गकलिङ्गाद्याः। यदुक्तं, विष्णुपुराणे। ४।१८।१। "हेमात् सुतपास्तस्मात् वलिः यस्य क्षेत्रे दीर्घतमसा अङ्गवङ्गकलिङ्गसुह्मपुण्ड्राख्यं वालेयं क्षत्रमजन्यत॥")

व(ब)लिनी, स्त्री, (वलं दैर्घ्यत्वेनास्त्यस्या इति इनिः। ङीप्।) वाट्यालकः। इति शब्दचन्द्रिका॥

व(ब)लिपुष्टः, पुं, (वैश्वदेवेन वलिना पुष्टः।) काकः। इत्यमरः।२।५।२०॥

व(ब)लिपोदकी, स्त्री, (वलेः पोदकी उपोदकी।) उपोदकी। इति राजनिर्घण्टः॥

व(ब)लिप्रियः, पुं, (वलिमुपहारं प्रीणातीति। वलि+प्री+क।) लोध्रवृक्षः। इति शब्दचन्द्रिका॥ (वलिर्वैश्वदेववलिः प्रियो यस्य इति व्युत्पत्त्या काकः। उपहारप्रिये वाच्यलिङ्गः॥)

व(ब)लिभः, त्रि, (वलिश्चर्म्मसंकोचोऽस्त्यस्येति। वलि+"तुन्दिवलिवटेर्भः।" ५।२।१३९ इति भः।) वलिनः। इत्यमरः।२।६।४५॥

व(ब)लिभुक्, [ज्] पुं, (वलिं वैश्वदेववलिं गृहस्थदत्तद्रव्यं वा भुङ्क्ते इति। भुज्+क्विप्।) काकः। इत्यमरः। २।५।२०॥ (यथा, भागवते।१।१८।३३।

"अहो अधर्म्मः पालानां पीव्नां वलिभुजामिव॥",)

व(ब)लिमन्दिरं, क्ली, (वलेः स्वनामख्यातस्य राज्ञो मन्दिरमालयः। वलिर्हि वामनरूपाय विष्णवे सर्व्वस्वं दत्त्वा पुरन्दरेण सह पाताले निवसति इति पौराणिकी कथात्रानुसन्धेया।) अधोलोकः। पातालम्। इति शब्दमाला॥

व(ब)लिमान्, [त्] त्रि, (वलिश्चर्म्मसंकोचोऽस्यास्तीति। वलि+मतुप्।) वलिनः। जरया श्लथचर्म्मयुक्तः। इत्यमरटीका॥ (वलिः पूजोपहारं विद्यतेऽस्येति व्युत्पत्त्या उपहारविशिष्टः। यथा, रघुः।१४।१५।

"वाष्पायमाणो वलिमन्निकेतमालेख्यशेषस्य पितुर्व्विवेश॥")

व(ब)लिमुखः, पुं, (वलिर्मुखे यस्य। यद्वा, वलिश्चर्म्मसङ्कोचस्तद्युक्तं मुखं यस्य।) वानरः। इत्यमरटीकायां रमानाथः॥

व(ब)लिष्ठः, पुं, (अतिशयेन वलवान्+वलवत्+इष्ठन्। विन्मतोर्लुगिति मतुपो लुक्। प्रभूतभारवाहकत्वादस्य तथात्वम्।) उष्ट्रः। इति राजनिर्घण्टः॥ (धर्म्मसावर्णिकमन्वन्तरान्तर्गत ऋषिभेदः। यथा, मार्कण्डेये।९४।१६।

"हविष्मांश्च वलिष्ठश्च ऋषिरन्यस्तथारुणिः।
निश्चरश्चानघश्चैव विष्टिश्चान्यो महामुनिः॥
सप्तर्षयोऽन्तरे तस्मिन्नग्निदेवश्च सप्तमः॥"

एतयोर्व्ययात् क्वचित् वरिष्ठश्चेति पाठो दृश्यते॥)

व(ब)लिष्ठः, त्रि, (अतिशयेन वलवान्। वलवत्+इष्ठन्। विन्मतोर्लुगिति मतुपो लुक्।) अतिशयवलवान्। यथा,—

"प्रायश्चित्तं विना पूता त्वमेव यदमागमा।
अकामा या वलिष्ठेन न स्त्री जारेण दुष्यति॥"

इति ब्रह्मवैवर्त्ते प्रकृतिखण्डे ५५ अध्यायः।

वलिष्ठा यथा। वायुः १ विष्णुः २ गरुडः ३ हनूमान् ४ यमः ५ महावराहः ६ शरभः ७ सत्यप्रतिज्ञा ८ गजः ९ पृथुराजः १० वलरामः ११ वाली १२ वालिः १३ भीमः १४ सती १५ भीमः १६ पुराकृतम् १७। इति कविकल्पलता॥

बलिपुष्टः, त्रि, (वल्यते वध्यते इति । वल+इष्णुः ।) अपमानितः । इत्युणादिकोषः ॥

व(ब)लिवद्म, [न्] क्ली, (वलेस्तदाख्यदैत्यस्य सद्म निकेतनम् ।) रसातलम् । इत्यमरः ।१।८।१॥

व(ब)लिहा, [न्] पुं, (वलिं हन्ति इति । वलि+हन्+क्विप् । वामनरूपेण वलेः सर्व्वस्वग्रहणादस्य तथात्वम् ।) विष्णुः । इति हेमचन्द्रः ॥

व(ब)ली, [न्] पुं, (वलमस्यास्तीति । वल+"वलादिभ्यो मतुबन्यतरस्याम् ।" ५ । २ । १३६ । इति पक्षे इनिः ।) वलरामः । इति शब्दरत्नावली ॥ उष्ट्रः । महिषः । वृषभः । शूकरः । कफः । कुन्दवृक्षः । इति जटाधरः ॥ माषः । (स्वनामख्यातो वत्सप्रीपुत्त्रः । यथा, मार्कण्डेये । ११८ । २ ।
"वली वलाकश्चण्डश्च प्रचण्डश्च सुविक्रमः ॥")

वलयुक्तः, त्रि । तत्पर्य्यायः । अंशलः २ निर्दिग्धः ३ मांसलः ४ उपचितः ५ । इति हेमचन्द्रः । ३ । ११२ ॥ (यथा, मार्कण्डेये । ३४ । ८६ ।
"नाढ्यं न वलिभिः कुर्य्यान्न च न्यूनैर्न निन्दितैः ॥")

व(ब)ली, स्त्री, (वलि+पक्षे ङीष् ।) वलिः । जरया श्लथचर्म्म । इत्यमरटीकायां भरतः ॥ (यथा,—
"कुष्ठं सुचूर्णितं कृत्वा घृतमाक्षिकसंयुतम् ।
भक्षयात् स्वप्नवेलायां वलीपलितनाशनम् ॥"
इति वैद्यकभैषज्यधन्वन्तरौ रसायनाधिकारे ॥)

व(ब)लीकं, क्ली, (वलति संवृणोतीति । वल संवरणे+"अलीकादयश्च ।" उणा० ४ ।२५। इति कीकन् ।) पटलप्रान्तम् । इत्यमरः । २ । २ । १४ ॥ छाँच इति भाषा ॥ (यथा, माघे । ३ । ५३ ।
"यस्यामसेवन्त नमद्वलीकाः
समं वधूभिर्वलभीर्युवानः ॥")

व(ब)लीमुखः, पुं, (वलीयुक्तं मुखं यस्य ।) वानरः । इत्यमरः । २ । ५ । ३ ॥

व(ब)लीयान्, [स्] त्रि, (अतिशयेन वलवान् । वलवत्+ईयसुन् ।) अतिशयवलयुक्तः । यथा,—
"आगमादेशयोर्मध्ये वलीयानागमो विधिः ॥"
इति दुर्गादासटीका ॥

व(ब)लीवर्दः, पुं, (ईर्लक्ष्मीः वर् वरणम् । वर् ईप्सायां क्विप् । ईश्च वर् च ईवरौ तौ ददातीति ईवर्दः । वलमस्यास्तीति वली । ततो वली च ईवर्दश्च इति ।) वृषः । इत्यमरः । २ । ९ । ५९ ॥ (यथा, कथासरित्सागरे । २० । २७ ।
"संयोज्याथ वलीवर्दयुगं रचितमङ्गलः ।
कृत्वा वलिं तस्य तरोरारेभे कर्षितुमत्र सः ॥")
तीर्थयात्रायां तदारूढ़स्य दोषो यथा,—
"वलीवर्दसमारूढ़ः शृणु तस्यापि यत् फलम् ।
नरके वसते घोरे गवां क्रोधे हि दारुणे ॥
सलिलञ्च न गृह्णन्ति पितरस्तस्य देहिनः ॥"
इति मात्स्ये ८८ अध्यायः ॥

व(ब)ल्यं, क्ली, (वलाय हितम् । वल+"वुञ्छण् कठजिलसेनिरढञ्ण्ययेति ।" ४।२।८०। इति यः ।) प्रधानधातुः । शुक्रम् । वलकरे, त्रि । इति मेदिनी । ये, ४० ॥ (यथा,—
"कट्वम्लवीर्य्यो लशुनो हितश्च
स्निग्धो गुरुस्वाद्दुरसोऽथ वल्यः ॥"
इति हारीते कल्पस्थाने तृतीयेऽध्याये ॥)

वल्यः, पुं, (वलाय शक्तये हितः । वल+यः ।) बुद्धभिक्षुकः । इति त्रिकाण्डशेषः ॥

वल्या, स्त्री, (वलाय हिता । वल+"वुञ्छण् कठेति ।" ४ । २ । ८० । इति यः । ततष्टाप् ।) अतिवला । अश्वगन्धा । शिम्बीड़ीचुपः । प्रसारिणी । इति राजनिर्घण्टः ॥

वल्ह, ङ स्तुतौ । हिंसायाम् । दाने । वाचि । इति कविकल्पद्रुमः ॥ (भ्वा०-आत्म०-सक०-सेट् ।) अन्तःस्थतृतीयोपधः । ङ, वल्हते । इति दुर्गादासः ॥

वष्कयणी } स्त्री, (वष्कयस्तरुणवत्सः । सोऽस्ति
वष्कयिणी } अस्याः । वष्कय+पामादित्वान्नः पक्षे इनिः । "अट्कुप्वाङिति" णत्वम् । ततो ङीप् ।) चिरप्रसूता गौः । इत्यमरभरतौ ॥ (यथा, सिद्धान्तकौमुद्याम् । २ । १ । ६५ ।
"पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः ॥")

बहु, त्रि, (बंहते इति । बहि वृद्धौ+"लङ्घिबंह्योर्न लोपश्च ।" उणा० १ ।३०। इति कुर्नलोपश्च ।) त्र्यादिसंख्या ॥ अनेकम् । विपुलः । इति मेदिनी । हे, ६ ॥ तत्पर्य्यायः । प्रभूतम् २ प्रचुरम् ३ प्राज्यम् ४ अदभ्रम् ५ बहुलम् ६ पुरुहम् ७ पुरु ८ भूयिष्ठम् ९ स्फिरम् १० भूयः ११ भूरि १२ । इत्यमरः । ३ । १ । ६३ ॥ तद्वैदिकपर्य्यायः । उरु १ तुवि २ पुरु ३ भूरि ४ शश्वत् ५ विश्वम् ६ परीणसा ७ व्यानशिः ८ शतम् ९ सहस्रम् १० सलिलम् ११ कुवित् १२ । इति द्वादश बहुनामानि । इति वेदनिघण्टौ । ३ । १ ॥ (यथा, मनुः । ७ । ८६ ।
"अल्पं वा बहु वा प्रेत्य दानस्यावाप्यते फलम् ॥"
तथा, तत्रैव । ८ । ७७ ।
"एकोऽलुब्धस्तु साक्षी स्याद्बह्व्यः शुच्योऽपि न
स्त्रियः ॥"
बहुमतम् । बहुमानम् । यथा, रघुः ।१२। ८९ ।
"रामस्तुलितकैलासमरातिं बह्वमन्यत ॥")

बहुकः, पुं, (बहु+संज्ञायां कन् ।) कर्कटः । अर्कः । दात्यूहः । जलखातकः । इति मेदिनी । के, १२६ ॥ ("संख्याया अतिशदन्तायाः कन् ।" ५ । १ । २२ । इति कन् । बहुभिः क्रीतः, त्रि ।)

बहुकण्टकः, पुं, (बहूनि कण्टकान्यस्य ।) क्षुद्रगोक्षुरः । यवासः । हिन्तालः । इति राजनिर्घण्टः ॥

बहुकण्टका, स्त्री, (बहूनि कण्टकान्यस्याः ।) अग्निदमनी । इति राजनिर्घण्टः ॥

बहुकण्टा, स्त्री, (बहवः कण्टाः कण्टकानि यस्याः ।) कण्टकारी । इति राजनिर्घण्टः ॥ (विवृतिरस्याः कण्टकारीशब्दे ज्ञातव्या ।)

बहुकन्दः, पुं, (बहवः कन्दा यस्य ।) शूरणः । इति राजनिर्घण्टः ॥

बहुकन्दा, स्त्री, (बहवः कन्दा यस्याः ।) कर्कटी । इति राजनिर्घण्टः ॥

बहुकरः, पुं, (बहु कार्य्यं करोतीति । बहु+कृ+"दिवाविभानिशाप्रभेति ।" ३ । २ । २१ । इति टः ।) उष्ट्रः । इति त्रिकाण्डशेषः ॥

बहुकरः, त्रि, (बहु करोति भुवं संमार्ष्टि इति । बहु+कृ+टः ।) मार्ज्जनकारी । तत्पर्य्यायः । खलपूः २ । इत्यमरः । ३ । १ । १७ ॥ भूमिसम्मार्ज्जकः ३ । इति शब्दरत्नावली ॥ बहुकार्य्यकर्त्ता । यथा, भट्टिः । ५ । ७८ ।
"निघ्नता वैरकाराणां सतां बहुकरः सदा ।
पारश्वधिकरामस्य प्रक्तोरन्तकरो रणे ॥"

बहुकरी, स्त्री, (बहु करोति भुवं संमार्ष्टि इति । बहु+कृ+टः । ङीप् ।) सम्मार्ज्जनी । इति हेमचन्द्रः । ४ । ८२ ॥

बहुकर्णिका, स्त्री, (बहवः कर्णा इव पत्राणि यस्याः ।) आखुकर्णी । इति राजनिर्घण्टः ॥

बहुकूर्च्चः, पुं, (बहूनि कूर्च्चानि यस्य ।) मधुनालिकेरिकः । इति राजनिर्घण्टः ॥

बहुगन्धं, क्ली, (बहुर्गन्धो यस्मिन् ।) त्वचम् । इति राजनिर्घण्टः ॥ (दारचिनी इति भाषा ॥)

बहुगन्धः, पुं, (बहुर्गन्धो यस्मिन् ।) कुन्दुरुकः । इति राजनिर्घण्टः ॥ (उग्रगन्धे, त्रि ॥)

बहुगन्धदा, स्त्री, (बहुगन्धं ददाति या । बहुगन्ध+दा+क ।) कस्तूरी । इति राजनिर्घण्टः ॥ (गुणादयोऽस्याः कस्तूरीशब्दे ज्ञातव्याः ॥)

बहुगन्धा, स्त्री, (बहुर्गन्धो यस्याम् ।) चम्पककलिः । यूथिका । कृष्णजीरकः । इति राजनिर्घण्टः ॥

बहुगर्ह्यवाक्, [च्] त्रि, (बहु गर्ह्या बहु निन्दिता वाग् यस्य ।) कुत्सितबहुवादी । इत्यमरः ॥

बहुग्रन्थिः, पुं, (बहवो ग्रन्थयो यस्य ।) झावुकः । इति शब्दचन्द्रिका ॥ (झाउ इति भाषा ॥)

बहुच्छिन्ना, स्त्री, (बहु यथा स्यात्तथा छिद्यते स्मेति । बहु+छिद्+क्त ।) कन्दगुडूची । इति राजनिर्घण्टः ॥

बहुतः, [स्] य, (बहुभ्य इत्यर्थे बहुशब्दात् "पञ्चम्यास्तसिल् ।" ५।३।७। इति तसिल्प्रत्ययः ॥) बहुभ्यः ॥

बहुतन्त्रिः, त्रि, (बहवस्तन्त्रयो यस्य ।) बहुतन्त्रविशिष्टः । यथा । बहुतन्त्रिः कायः । बहुतन्त्री ग्रीवा । बहुतन्त्रि गात्रम् । यथा च । विभज्य नक्तं दिवमस्ततन्त्रिणेति किराते ह्रस्वेकारान्ततन्त्रिशब्दस्य प्रयोगः । इति संक्षिप्तसारः ॥

बहुतन्त्रीः, त्रि, (बहवस्तन्त्र्यो यस्मिन् ।) बहुतन्त्रविशिष्टः । यथा । बहुतन्त्रीर्ग्रीवा बहुतन्त्रीर्धमनी । इति सिद्धान्तकौमुदी ॥ एवं बहुतन्त्रीः कायः । बहुतन्त्रि गात्रम् ॥

बहुतन्त्रीकः, त्रि, (बहुतन्त्री+स्वार्थे कन् ।) बहुतन्त्रविशिष्टः । यथा । बहुतन्त्रीका ग्रीवा ।

